( वाजपेयविषययूपारोहणाभिधानम् )

समहं प्रजया सं मया प्रजा समहꣳ
रायस्पोषेण सं मया रायस्पोषः—

कल्पः—"अथेमं लोकं प्रत्यवेक्षते समहं प्रजया सं मया प्रजा समहꣳ रायस्पोषेण सं मया रायस्पोष इति" इति।

संगतोऽस्मि संगम्यतामिति यथायोगमध्याहर्तव्यम् ॥

आशीःपरत्वेन व्याचष्टे—

"समहं प्रजया सं मया प्रजेत्याह। आशिषमेवैतामाशास्ते।" [ब्रा० का० १ प्र० ३ अ० ७] इति ॥

अन्नाय त्वाऽन्नाद्याय त्वा वाजा-
यं त्वा वाजजित्यायै त्वा—

कल्पः—"तमेवमासपुटैर्घ्नन्ति अन्नाय त्वेति पुरस्तादध्वर्युः, अन्नाद्याय त्वेति दक्षिणतो ब्रह्मा, वाजाय त्वेति पश्चाद्धोता, वाजजित्यायै त्वेत्युत्तरत उद्गाता" इति।

ऊषखननपांसव आसास्तानश्वत्थपत्रैः पुटीकृत्य तैरासपुटैर्यूपादवरोहन्तं यजमानं हन्युः।

अत एवाऽऽपस्तम्ब आह "तमाश्वत्थैरासपुटैरूषपुटैरुभयैर्वा वैश्याः प्रतिदिशमपघ्नन्ति महर्त्विजो वा दीर्घवंशेषु प्रबध्य" इति।

सामान्येन प्राणिभिर्भोज्यमन्नं, राजामात्यादिभिर्भोज्यमन्नाद्यम्। तत्राप्यपूपादिविशेषो वाजः। तस्य सर्वस्यान्नस्य संपादनं वाजजित्या ॥

द्विविधं हननं क्रमेण विधत्ते—

"आसपुटैर्घ्नन्ति। अन्नं वा इयम्। अन्नाद्येनैवैनꣳ समर्धयन्ति। ऊषैर्घ्नन्ति। एते हि साक्षादन्नम्। यदूषाः। साक्षादेवैनमन्नाद्येन समर्धयन्ति।" [ब्रा० का० १ प्र० ३ अ० ७] इति।

ऊषाणामुत्थानादिसाधनत्वेन पारलौकिकान्नं प्रति साक्षात्साधनत्वम् ॥

हनने प्रकारविशेषं विधत्ते—

"पुरस्तात्प्रत्यञ्चं घ्नन्ति (•६)। पुरस्ताद्धि प्रतीचीनमन्नमद्यते।" [ब्रा० का० १ प्र० ३ अ० ७] इति।

हन्यमानस्य पुरस्तादवस्थितो हन्ता प्रत्यञ्चं स्वाभिमुखं हन्यात्। लोकेऽपि हि पुरतोऽवस्थितात्पात्रात्समादाय स्वाभिमुखं तदन्नमद्यते ॥

१ ख. च. प्रबन्ध्य।

एतदापस्तम्बेन स्पष्टीकृतम्—" मुखतोऽभिघ्नन्ति हन्तारं हन्तारमभिपर्यावर्तते " इति ॥

ताड्यमानं प्रदेशं विधत्ते—

"शीर्षतो घ्नन्ति । शीर्षतो ह्यन्नमद्यते।" [ब्रा०का०१प्र०३ अ०७] इति ॥

चतुर्दिक्षु हननं विधत्ते—

"दिग्भ्यो घ्नन्ति । दिग्भ्य एवास्मा अन्नाद्यमवरुन्धते ।" [ ब्रा० का० १ प्र० ३ अ० ७ ] इति ॥

## अमृतमसि पुष्टिरसि प्रजननमसि—

कल्पः—" अत्रास्मै प्रत्यवरोहत आसन्दीं निदधाति तस्यां बस्ताजिनमास्तृणाति बस्ताजिने शतमान१ं हिरण्यं दक्षिणं पाद१ं हिरण्य उपावरोहयति अमृतमसीति, पुष्टिरसि प्रजननमसीति सव्यं बस्ताजिने " इति ।

हे हिरण्य त्वं विनाशरहितमसि । नह्यग्नौ प्रक्षिप्तमपि हिरण्यं काष्ठादिवद्विनश्यति । हे बस्ताजिन त्वं पुष्टिरसि संवत्सरे बह्वपत्योत्पादकत्वात् । एतदेवाभिप्रेत्य प्रजननमसीत्युच्यते ॥

हिरण्येऽवरोहं विधातुं प्रस्तौति—

" ईश्वरो वा एष पराङ्प्रदघः । यो यूप१ं रोहति । " [ब्रा० का० १ प्र० ३ अ० ७ ] इति ।

यूपमारूढो यजमानः पराङ्भूलोकाद्विमुखः प्रदघः प्रदग्धुं स्वात्मानं विनाशयितुमीश्वरः समर्थो भवति । अथ वा प्रदघः प्रकर्षेण गन्तुमीश्वरो न पुनरावर्तत इत्यर्थः ॥

विधत्ते—

" हिरण्यमध्यवरोहति । अमृतं वै हिरण्यम् । अमृत१ं सुवर्गो लोकः । अमृत एव सुवर्गे लोके प्रतितिष्ठति ।" [ ब्रा० का० १ प्र० ३ अ० ७ ] इति ॥

हिरण्यस्य परिमाणं विधत्ते—

" शतमानं भवति । शतायुः पुरुष१ं शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति " [ ब्रा० का० १ प्र० ३ अ० ७ ] इति ।

मानशब्देन पणस्य त्रिंशो भागोऽभिधीयते । ततः पञ्चपणपरिमितमित्युक्तं भवति । शतसंख्याकाः संवत्सराः पुरुषस्याऽऽयुः । दशानां ज्ञानकर्मेन्द्रि-

याणां मध्ये चक्षुरादीन्द्रियस्यैकैकस्य दशसु नाडीषु वृत्तिभेदेन शतेन्द्रियत्वम् ॥

बस्ताजिने वामपादप्रक्षेपं विधातुं प्रस्तौति-

"पुष्ट्यै वा एतद्रूपम्। यदजा। त्रिः संवत्सरस्यान्यान्पशून्परिप्रजायते।" [ ब्रा० का० १ प्र० ३ अ० ७ ] इति।

संवत्सरे सकृत्प्रसवोपेतानन्यान्गवादिपशून्परित्यज्य संवत्सरे त्रिरपत्यानि प्रसूतेऽतोऽस्याः पुष्टिरूपत्वम् ॥

विधत्ते—

"बस्ताजिनमध्यवरोहति। पुष्ट्यामेव प्रजनने प्रतितिष्ठति (७)।" [ ब्रा० का० १ प्र० ३ अ० ७ ] इति ॥

अत्र विनियोगसंग्रहः—

"क्षत्र तार्प्यं क्षत्र दार्भ्यं परिधत्तोऽत्र दंपती।
जाय स्वाम्याह्वयद्भार्या रोहा तं प्रतिवक्ति सा ॥ १ ॥
अहं स्वाम्याह वाजश्च जुहुयाद्द्वादशाऽऽहुतीः।
आयुर्दशभिरारोहेत्स्वयं वाहूद्रहः सुवः ॥ २ ॥
सं भवं प्रेक्षणेऽन्नाय चतुर्भिस्तु महर्त्विजः।
दिग्भ्यो ग्रन्त्यासपुटैरूमृपुष्टिद्वयात्पदे ॥
स्वर्णवस्त्वचोद्यात्पश्चत्रिंशच्चिहोदिताः ॥ ३ ॥" इति ॥

अथ मीमांसा।

दशमाध्यायस्य चतुर्थपादे चिन्तितम्—

"तार्प्यमहतवस्त्रस्य बाधकं स्यान्न वाऽग्रिमः
गुह्याच्छादनकार्यैक्यादयोग्यत्वात्समुच्चयः"

महाव्रते श्रूयते—"तार्प्यं यजमानः परिधत्ते दर्भमयं पत्नी" इति। प्रकृतौ "अहतं वासः परिधत्ते" इति घृताक्तं वस्त्रं तार्प्यमित्युच्यते। ताभ्यां तार्प्यदर्भमयाभ्यां दंपत्योरहतं वस्त्रं बाध्यते। कुतः। परिधत्त इत्यनेन प्रकृतिलिङ्गेन गुह्याच्छादनलक्षणस्य कार्यस्यैकत्वावगमात्। मैवम्। तार्प्यदर्भमययोर्गुह्यमाच्छादयितुमयोग्यत्वात्। परिधानं त्वत्रोपरितनं प्रावरणम्। तत्कार्यभेदात्समुच्चयः।

तृतीयाध्यायस्य प्रथमपादे चिन्तितम्—

"भवेत्सप्तदशारत्निर्वाजपेयस्य यूपकः।
उन्मानं द्रव्यगं वाजपेयस्याङ्गं पशोरुत ॥

( वाजपेयविषययूपारोहणाभिधानम् )

आनन्तर्यात्प्रकरणात्कर्माङ्गं षोडशिन्यदः ।
ऊर्ध्वपात्रे खादिरेऽग्रे संयुज्यान्वेति कर्मणा ॥
यूपद्वारा पशोरङ्गं पशुद्वारा च कर्मणः ।
सौमिकत्वाद्वाजपेये यूपो नास्ति पशुं विना ॥"

वाजपेयप्रकरणे श्रूयते—"सप्तदशारत्निर्वाजपेयस्य यूपो भवति" इति । अत्र यूपद्रव्यगतं सप्तदशारत्निशब्दोदितं यदूर्ध्वमानं तद्वाजपेयकर्मणोऽङ्गं, सप्तदशारत्निशब्दवाजपेयशब्दयोरानन्तर्यात् । प्रकरणं चैवमनुगृह्यते । यदि कर्मणः साक्षादूर्ध्वमानं न संभवेत्तर्हि वाजपेयगतं खादिरमूर्ध्वं यत्षोडशिपात्रं तस्मिन्नद उन्मानं संबध्य तद्द्वारा कर्मणाऽन्वेतीति प्राप्ते ब्रूमः—सप्तदशारत्निर्यूप इति सामानाधिकरण्याद्यूपेन साक्षात्संबध्यते । तस्य च यूपस्य पश्वङ्गत्वादुन्मानं यूपद्वारा पशोरङ्गं भवति । तस्यापि पशोर्वाजपेयाङ्गत्वात्पशुद्वारा कर्मणोऽङ्गम् । यद्यपि वाजपेययूपशब्दयोरानन्तर्यमस्ति तथाऽपि वाजपेयस्य सोमयागतया साक्षाद्यूपसंबन्धाभावात्पशुव्यवधानमभ्युपेयम् । वाजपेयस्येति षष्ठ्याः संबन्धमात्रवाचित्वेन व्यवहितसंबन्धमप्यसावभिधत्ते, देवदत्तस्य नप्तेति प्रयोगवत् । यत्सप्तदशारत्निवाजपेयशब्दयोरानन्तर्यं यच्च प्रकरणं तदुभयं न विरुद्धं, पश्वङ्गत्वेऽप्यन्ततो वाजपेयाङ्गत्वाङ्गीकारात् । किं च पूर्वपक्षे यूपशब्देन षोडशिपात्रं लक्षणीयम् । सिद्धान्ते तु नास्त्ययं दोषः ॥

तत्रैवाष्टमपादे चिन्तितम्—

"वाचयेत्स्वामिनं ज्ञाज्ञौ वाचनीयो ज्ञ एव वा ।
अविशेषादुभौ ज्ञस्य स्वामित्वाद्वाचयेदमुम् ॥" ।

वाजपेये श्रूयते—"कॢप्तीर्यजमानं वाचयति" इति । आयुर्यज्ञेन कल्पतामित्यादयो मन्त्राः कॢप्तयः । तत्र मन्त्रतदर्थाभिज्ञमनभिज्ञं चोभावपि वाचयेत्, विद्वांसं वाचयेदित्येवं विशेषस्याश्रवणात्, अनभिज्ञं तदैव शिक्षयित्वाऽपि वाचयितुं शक्यत्वादिति चेन्मैवम् । अध्ययनविधिबलादधीतवेदस्य विदितवेदार्थस्यैव यजमानत्वात् । तस्मादभिज्ञमेव वाचयेत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥